# संस्कृत-प्रवेशिका

## प्रथमो भागः

गुरुकुल कांगड़ी विश्वविद्यालय-हरिद्वार

# गुरुकुलोद्देश्यानि

लोके तपोधनपुनर्जननं यथा स्यात्,
तेजोविहीनजनताविलयो यथा स्यात् ।
सद्-ब्रह्मचर्यचरण-प्रसरो यथा स्यात्,
एतत्तथा गुरुकुलं विबुधा निबद्धम् ॥ १ ॥

आचार्यशिष्यजनभावनया विहीनां,
कीरोपमाज्ञजनमात्र विभूति दक्षां ।
शिक्षां विचार्य मनसा किल दूषयित्रीम्,
एतत्तथा गुरुकुलं विबुधा निबद्धम् ॥ २ ॥

या कारणं सकल बोधकलोदयानाम्,
आद्यो गुरुः स भगवांश्च यदीयवक्ता ।
तासां कथा निगमपुण्यगिरां जगत्यां,
कर्त्तुं पुनर्गुरुकुलं विबुधा निबद्धम् ॥ ३ ॥

— हरिश्चन्द्रः ।

ओ३म्



गुरुकुल संस्कृत पाठमाला — प्रथमपुष्पम्

# संस्कृत-प्रवेशिका

## [ प्रथमो भागः ]

गुरुकुल कांगड़ी विश्वविद्यालय के आचार्य जी की आज्ञानुसार
गुरुकुल कांगड़ी के लिए
श्री हरिश्चन्द्र विद्यालंकार ने सम्पादन किया

प्राप्ति स्थानम् —
पुस्तक भण्डार, गुरुकुल कांगड़ी, हरिद्वार।

प्रकाशक—
धर्मपाल विद्यालङ्कार,
स. मुख्याधिष्ठाता, कृते पुस्तक भण्डार,
गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।

१४वीं आवृत्ति २००० प्रतियां सम्वत् २००६।
१५वां संस्करण १००० प्रतियां सम्वत् २०११।
१६वां संस्करण १००० प्रतियां सम्वत् २०१५।
१७वां संस्करण २००० प्रतियां सम्वत् २०१७।



मुद्रक—
रामेश बेदी,
गुरुकुल मुद्रणालय,
गुरुकुल कांगड़ी, हरिद्वार।

# द्वित्राः शब्दाः

या संस्कृतभाषा कस्मिंश्चित् समये भारततनयानां मातृभाषाऽऽसीत्, यस्या भाषाया मधुरध्वनिः कस्मिंश्चित् काले महतो विक्रमादित्यस्य विद्वन्मण्डितायां परिषद्यश्रूयत, तस्या दुर्दशाऽद्य भारते लक्ष्यते । तामवलोक्य सचेतसां प्राचीनसेविनां च हृदयानि विदीर्णानि जायन्ते । यद्यप्यस्यामल्पाधारभूमिकायां संस्कृतभाषाया दुःस्थितेः कारणकलापस्यालोचनं नोचितं वर्तते, तथाप्येतन्निर्भीकमुपन्यस्तुं शक्यते यत्संस्कृतविद्वांस एवात्रोपालम्भमर्हन्ति ।

संस्कृताध्यापकानां यादृश्यद्यत्वेऽध्यापनप्रणाली वर्तते, तया संस्कृतच्छात्रैर्महान् प्रयासोऽङ्गीकर्त्तव्यो भवति; गुरुकृपया चतुर्दशभिर्हायनैः कथंचिद्गृहीतव्याकरणलवा अपि प्रायो दृश्यन्ते यत्संस्कृतभाषाया एकमपि वाक्यं वक्तुं न शक्नुवन्ति ।

अहन्तु मन्ये, संस्कृताध्यापनस्य विचित्रा रीतिरेवात्र कारणं वर्तते । भाषाया अल्पमपि परिचयमन्तरैवाध्यापकैर्व्याकरणाध्यापनमारभ्यते, तेन महान् प्रयासोऽङ्गीकर्तव्यो भवति, महान् कालक्षेपश्च जायते, अल्पमत्यल्प फलमुपलभ्यते । भाषापरिचयमन्तरैव कथन्नाम कस्याश्चित् भाषाया व्याकरणमवगन्तुं शक्यते ?

एतस्य फलमपि संस्कृताध्येतृभिरुपभुज्यत एव । प्रायेण तेषां विचारशक्तिः प्रणाशमुपयाति, स्मरणशक्तिरेवावशिष्यते । अत्रापवादा अपि दुर्लभा न सन्ति, तथाप्यौत्सर्गिकी दशा सैव दृश्यते खलु या मयोर्ध्वमदर्श्यत ।

इयं खल्ववस्था कृतवयसाम् । यदि बालका आदावेव व्याकरणं पाठ्येरंस्तदा तेषामतोपि हीनतरा दशा जायते,

तेषां शिक्षणेऽतोऽप्यधिकं काठिन्यमनुभूयते । ते तु न कथमपि भाषापरिचयमन्तरा व्याकरणं बोद्धुमर्हन्ति । किंच भाषाज्ञानं मुख्यमुद्देश्यं, व्याकरणज्ञानन्तु तदुपकारकम् ।

एतदेव काठिन्यमध्यापनावसरे गुरुकुलीयशिक्षकवर्गेण भृशमनुभूतम् । भूयो गवेषितेऽपि न किमपि पुस्तकम् बालानामपुकारकं मम दृष्टिपथमुपागमत् । यद्यपि संस्कृतभास्करादिनामांकितानि कतिपयपुस्तकान्युपलभ्यन्ते, तथापि न तानि कथंचिदपि बालोपकारकतां भजन्ते । एतदेव मनसिकृत्य बालोपकारकाणि कानिचित् पुस्तकानि संस्कृतग्रन्थावलिमिषेण प्रकाशयितुमहं निरचैषम् । तस्योद्योगस्य फलभूतेयं 'प्रवेशिका' भवतां करमुपसर्पति । अनयैव रीत्याऽन्यान्यपि बालोपयोगीनि पुस्तकानि प्रकाशयिष्यन्ते । गुरुकुलोपकारं कुर्वन्तीयं ग्रन्थावलिराशास्यते अन्येषां संस्कृतविद्यालयानामध्यापकानाञ्चाप्युपकारिका भविष्यति ।

शुभकामनाप्रेरिताः सर्वे विमर्शाः सादरं सधन्यवादञ्च स्वीकरिष्यन्ते ।

— आचार्यः ।

# संस्कृत-प्रवेशिका

## [ प्रथमो भागः ]

### पाठः १

जलम् फलम् पुरुषम् बालकम्
पिब यच्छ धारय आनय
पाठम् वस्त्रम् पुस्तकम् कुक्कुरम्
पठ पश्य दर्शय भक्षय

कमलम् पश्य ।
जलम् पिब ।
पाठम् पठ ।
पुष्पम् यच्छ ।
पत्रम् लिख ।

फलम् भक्षय ।
कुक्कुरम् दर्शय ।
बालकम् पाठय ।
पुस्तकम् आनय ।
वस्त्रम् धारय ।

## पाठः २

| पिबति | यच्छति | पठति | धावति |
|---|---|---|---|
| पुरुषः | मयूरः | बालकः | अश्वः |
| सः | एषः | एकः | कः |

बालकः मयूरम् पश्यति ।
पुरुषः वस्त्रम् आनयति ।
सः फलम् यच्छति ।
कुक्कुरः जलम् पिबति ।
सः अश्वः जलम् पिबति ।
एकः पुरुषः फलम् भक्षयति ।
एषः बालकः पुस्तकम् पठति ।
कः धावति ? यज्ञदत्तः धावति ।
कः चित्रम् पश्यति ? देवदत्तः चित्रम् पश्यति ।

—

## पाठः ३

| | | | |
|---|---|---|---|
| पिबति | पिबसि | पिबामि | आम् |
| वृषभः | त्वम् | अहम् | न |
| तक्रम् | दुग्धम् | कन्दुकम् | किम् |

त्वम् किम् पश्यसि ? अहम् एकम् गजम् पश्यामि ।
सः किम् करोति ? सः शुण्डेन जलम् पिबति ।
किम् त्वम् दुग्धम् पिबसि ? न, अहम् तक्रम् पिबामि ।
किम् देवदत्तः पुस्तकम् न आनयति ?
श्रीमन् ! देवदत्तः पुस्तकम् न आनयति ।
किम् त्वम् फलम् भक्षयसि ?
आम्, अहम् फलम् भक्षयामि ।
सः अश्वः घासम् भक्षयति ।
सः एकम् फलम् नयति ।

—

## पाठः ४

| | | | |
|---|---|---|---|
| बालकः | बालकौ | बालकाः | एकः |
| नयतः | जिघ्रतः | गच्छतः | द्वौ |
| गच्छन्ति | क्रीडन्ति | क्षिपन्ति | त्रयः |

द्वौ पुरुषौ आम्रम् भक्षयतः ।
एका बालिका पुष्पम् जिघ्रति ।
द्वौ बालकौ पाठशालाम् गच्छतः ।
द्वौ बालकौ पुष्पम् जिघ्रतः ।
त्रयः पुरुषाः अश्वम् पश्यन्ति ।
त्रयः बालकाः क्रीडन्ति ।
बालकाः कन्दुकम् क्षिपन्ति ।
त्रयः पुरुषाः गच्छन्ति ।
किम् त्वम् तूलिकाम् आनयसि ?
आम्, अहम् तूलिकाम् आनयामि ।
अहम् मसिगर्भाम् यच्छामि ।

—

# पाठः ५

| मोदकानि | मह्यम् | मम | ददामि | अत्र |
|---|---|---|---|---|
| वस्त्राणि | तुभ्यम् | तव | देहि | तत्र |
| बालकाय | तस्मै | द्वे | पुस्तके | कुत्र |

बालकौ यज्ञम् कुरुतः ।
त्वम् मह्यम् द्वे पुस्तके देहि ।
अहम् तुभ्यम् द्वे पुस्तके ददामि ।
गोपालः अस्मै दुग्धम् आनयति ।
अहम् बालकाय मोदकानि आनयामि ।
मम वस्त्राणि तस्मै देहि ।
तव पुस्तकम् कुत्र अस्ति ?
मम पुस्तकम् अत्र अस्ति ।
अत्र त्रयः बालकाः धावन्ति ।

—

# पाठः ६

| | | | |
|---|---|---|---|
| श्रावय | लेखनीम् | उड्डीयेते | करोषि |
| उत्तिष्ठ | आसन्दीम् | उपविशन्ति | कुर्वन्ति |
| च | वृषभः | कोलाहलम् | स्मरामि |

द्वौ पक्षिणौ आकाशे उड्डीयेते ।
गौः वृषभः च जलम् पिबतः ।
नरेन्द्र ! उत्तिष्ठ पाठम् च श्रावय ।
उत्तिष्ठामि, पाठम् च श्रावयामि ।
मम लेखनीम् आसन्दीम् च आनय ।
त्वम् किम् करोषि ? अहम् पाठम् स्मरामि ।
नरेन्द्रः धीरेन्द्रः वीरेन्द्रः च पाठम् स्मरन्ति ।
हरिश्चन्द्रः सत्यकामः च पाठशालाम् गच्छतः ।
बालकाः तत्र उपविशन्ति, कोलाहलम् च कुर्वन्ति ।

—

# पाठः ७

| | | | |
|---|---|---|---|
| रोचते | गच्छेयम् | मोदकम् | गृहाण |
| वर्तते | मसीपात्रम् | स्मरामि | कुरु |

अत्र एकः हंसः तरति ।
सः तत्र क्रीडति ।
मम पुस्तकम् पश्य ।
मम पात्रम् तत्र नय ।
हरिदत्तः कोलाहलम् करोति ।
हरिदत्त ! कोलाहलम् न कुरु ।
किम् अहम् तत्र गच्छेयम् ? गच्छ ।
भूमित्रः कुत्र वर्तते ? भूमित्रः तत्र वर्तते ।
त्वम् कुत्र गच्छसि ? अहम् तत्र गच्छामि ।
नरेन्द्र ! तव पुस्तकम् अत्र वर्तते । गृहाण ।
तुभ्यम् किम् रोचते ? मह्यम् मोदकम् रोचते ।
मम मसीपात्रम् आनय । मम पुस्तकम् गृहाण ।
तत्र त्वम् किम् करोषि ? अहम् तव पाठम् स्मरामि ।

—

## पाठः ८

विद्यालये तिष्ठेयम् पत्रम् अद्य
शृणोति किमर्थम् लेखनीम् गृहे

तत्र वने त्रयः हरिणाः वर्त्तन्ते।
मम पुस्तकम् विद्यालये वर्तते।
यज्ञदत्त ! देवदत्तः किम् शृणोति ?
सः पाठम् शृणोति।
त्वम् किमर्थम् पुस्तकम् न पठसि ?
अहम् अद्य रोगी अस्मि।
मम लेखनीम् न गृहाण।
पश्य, तत्र गौः धावति।
त्वम् कुत्र पठसि ? अहम् गुरुकुले पठामि !
अद्य वासुदेवः कुत्र वर्तते ? सः गृहे वर्तते !
सः किम् लिखति ? सः पत्रम् लिखति।
अहम् कुत्र तिष्ठेयम् ? त्वं अत्र तिष्ठ।

—

## पाठः ९

मसिगर्भायाम्  घटिका  वर्तते  मसिः
घटिकायाम्  गर्जति  वदसि  काचः
वातायनम्  आकाशे  सिंहः  वृथा

घटिकायाम् एकः काचः वर्तते ।
मसिगर्भायाम् मसिः वर्तते ।
अश्वः सिहः च धावतः ।
त्वम् घटिकाम् अत्र आनय ।
देवराजः फलानि भक्षयति ।
घटिका कुत्र वर्तते ? घटिका विद्यालये वर्तते ।
चन्द्रशेखरः वने क्रीडति । सिंहः वने गर्जति ।
मेघः कुत्र गर्जति ? मेघः आकाशे गर्जति ।
वातायनम् दर्शय । बालकौ विद्यालयम् गच्छतः ।
त्वम् वृथा वदसि । पत्रम् गृहाण ।

—

# पाठः १०

| अधुना | एतौ | वानरान् | शूकरः |
|---|---|---|---|
| कुरुतः | तौ | कपीन् | उद्याने |

अधुना त्वम् किम् करोषि ?
अहं फलम् भक्षयामि ।
तौ तत्र कपीन् दर्शयतः ।
वने शूकरः धावति ।
मसिगर्भाम् तस्मै देहि ।
अधुना त्वम् विद्यालयम् गच्छ । गच्छामि ।
एतौ किम् कुरुतः ? एतौ वानरान् पश्यतः ।
बालकाः उद्याने क्रीडन्ति । तौ लवपुरम् गच्छतः ।
देवदत्तः यज्ञदत्तः भूमित्रः च ग्रामम् गच्छन्ति ।
अधुना फलानि गृहाण । त्वं लेखनीम् आनय ।
एकम् पत्रम् च लिख । तौ तत्र किम् दर्शयतः ?

—

संस्कृत भाषा में शब्दों के तीन वचन होते हैं। उदाहरणार्थ—

| एक वचन | द्विवचन | बहुवचन |
|---|---|---|
| बालकः | बालकौ | बालकाः |
| अश्वः | अश्वौ | अश्वाः |
| सः | तौ | ते |

—

## पाठः ११

| | | | |
|---|---|---|---|
| युवाम् | गच्छथः | एते | कुरुतः |
| यूयम् | पश्यथ | ते | कुर्वन्ति |
| भोः | गृह्णाति | कति | सन्ति |

भूदेवः कन्दुकम् गृह्णाति ।
तत्र कति फलानि सन्ति ?
तत्र बहूनि फलानि सन्ति ।
अहम् किमपि न करोमि ।
तौ तत्र एकम् पुस्तकम् पठतः ।
भोः बालकाः ! यूयं किम् पश्यथ ?
चन्द्रपालः गृहम् गच्छति । शब्दम् करोति ।
युवाम् पत्रम् लिखथः । वयम् गृहम् गच्छामः ।
ते तत्र किम् कुर्वन्ति ? ते तत्र पाठम् पठन्ति ।
श्रीमन्, न किमपि । एतौ कोलाहलम् कुरुतः ।

—

शब्दों के अनुसार क्रियाओं के भी तीन वचन होते हैं । उदाहरणार्थ —

| एक वचन | द्विवचन | बहुवचन |
|---|---|---|
| गच्छति | गच्छतः | गच्छन्ति |
| पिबति | पिबतः | पिबन्ति |
| पठति | पठतः | पठन्ति |

—

## पाठः १२

| | | | |
|---|---|---|---|
| आवाम् | गच्छावः | विडालस्य | वयम् |
| कुल्याम् | गच्छामः | रोगिणः | वर्तेते |
| भवान् | शृण्वन्ति | हरिणान् | शृणु |

इयम् एका महिषी वर्तते ।
सः हरिणान् गृह्णाति ।
ब्रह्मचारिणः हवनम् कुर्वन्ति ।
ते विडालस्य शब्दम् शृण्वन्ति ।
मम लेखनी पुस्तकम् च तत्र वर्तेते ।
यूयम् विद्यालयम् किमर्थं न गच्छथ?
श्रीमन् ! वयं रोगिणः स्मः ।
भो विष्णुदत्त ! त्वम् कोलाहलम् न कुरु ।
त्वम् वृथा शब्दम् करोषि । मम गानम् शृणु ।
यूवाम् कुत्र गच्छथः ? आवाम् गृहम् गच्छावः ।

—

## पाठः १३

| | | | |
|---|---|---|---|
| नादयति | क्रीडितुम् | त्वाम् | शाटिका |
| ताडयति | आनेतुम् | माम् | वेदना |
| निर्मलम् | पातुम् | कुतः | कुल्या |
| मलिनम् | स्थातुम् | अयम् | कीदृशम् |

अयम् कः वर्तते ? अयम् सिंहः वर्तते ।
पश्य, सिंहः वने गर्जति ।
भोः सुरेन्द्र ! मम शाटिकाम् आनय ।
ते माम् ताडयन्ति । सः घण्टाम् नादयति ।
तौ त्वाम् पश्यतः । त्वाम् च अहम् पश्यामि ।
अत्र किमर्थं तिष्ठसि ?
अहम् अत्र स्नातुम् तिष्ठामि ।

भोः भूपेन्द्र ! त्वम् क्रीडितुम् कुतः न गच्छसि ?
मम पादे वेदना वर्तते ।
तव उपउवस्त्रम् कीदृशम् वर्तते ?
मम उपवस्त्रम् मलिनम् वर्तते ।
यूयम् कुल्यायाम् स्नातुम् कुतः न गच्छथ ?
वयम् संतरणम् न जानीमः ।
निर्दयाः पुरुषाः पशून् ताडयन्ति ।
किम् अहम् मसिपात्रम् आनेतुम् गच्छेयम् ?
गच्छ ।
श्रीमन् ! जलम् पातुम् गच्छेयम् ? गच्छ ।

—

मध्यम पुरुष

| एक वचन | द्विवचन | बहुवचन |
| --- | --- | --- |
| गच्छसि | गच्छथः | गच्छथ |
| पिबसि | पिबथः | पिबथ |
| पठसि | पठथः | पठथ |

उत्तम पुरुष

| एक वचन | द्विवचन | बहुवचन |
| --- | --- | --- |
| गच्छामि | गच्छावः | गच्छामः |
| पिबामि | पिबावः | पिबामः |
| पठामि | पठावः | पठामः |

—

## पाठः १४

उदेति प्रक्षालय पीडय प्रकाशन्ते

प्रातःकाले सूर्यः उदेति । रात्रौ ताराः प्रकाशन्ते ।
इदानीम् सन्ध्यायाः समयः वर्तते ।
जलेन हस्तौ पादौ च प्रक्षालय ।
भोः बालकाः घंटानादः जातः अधुना पुस्तकानि
गृहीत्वा पठितुम् चलत ।
एषः विद्यालयः वर्तते ।
अत्र विद्यार्थिनः विद्याम् पठन्ति ।
एषः बालः पत्रम् पठति ।
भगवन् ! किम् अहम् मसिपात्रम् आनेतुम् गच्छे-
यम् ? गच्छ ।
भानुः कुत्र अस्ति ? सः रोगी अस्ति ।
वयम् श्लोकान् शृणुमः ।
कः गाम् पीडयति । हरिः गाम् पीडयति ।
हरे ! गाम् न पीडय । तौ पुरुषौ वृथा वदतः ।

—

# पाठः १५

पिपीलिका उष्ट्रः समीपम् बाढम्
साहाय्येन अधः शृणोमि उपरि
इतस्ततः अति प्राङ्गणे तेषाम्

उष्ट्रः वेगेन धावति ।
निर्मले आकाशे सूर्यः प्रकाशते ।
प्राङ्गणे काकाः शब्दम् कुर्वन्ति ।
पक्षिणः पक्षाणाम् साहाय्येन उड्डीयन्ते ।
तव उपवस्त्रम् अति मलिनम् अस्ति ।
भोः हरे ! त्वम् अधः किम् पश्यसि ?
अहम् अधः पिपीलिकाम् पश्यामि ।
मलिने आकाशे मेघाः इतस्ततः धावन्ति ।
अद्य आकाशः कीदृशः वर्तते ? निर्मलः वर्तते ।
किम् त्वं तेषां शब्दम् शृणोषि ? बाढम्, शृणोमि ।

त्वम् उपरि किम् पश्यसि ।
अहम् उपरि सूर्यम् पश्यामि ।
बालकाः तत्र क्रीडन्ति ।
तेषाम् समीपम् गच्छ । उष्ट्रः वेगेन धावति ।

( ख )

प्रत्येक धातु के लकारों में तीन पुरुष होते हैं । उदाहरणार्थ—

## गम्लृ ( गच्छ ) धातु — लट् लकार

| प्रथम पुरुष | मध्यम पुरुष | उत्तम पुरुष |
|---|---|---|
| गच्छति | गच्छसि | गच्छामि |
| गच्छतः | गच्छथः | गच्छावः |
| गच्छन्ति | गच्छथ | गच्छामः |

## पा ( पिब ) धातु — लट् लकार

| प्रथम पुरुष | मध्यम पुरुष | उत्तम पुरुष |
|---|---|---|
| पिबति | पिबसि | पिबामि |
| पिबतः | पिबथः | पिबावः |
| पिबन्ति | पिबथ | पिबामः |

## पठ् धातु — लट् लकार

| प्रथम पुरुष | मध्यम पुरुष | उत्तम पुरुष |
|---|---|---|
| पठति | पठसि | पठामि |
| पठतः | पठथः | पठावः |
| पठन्ति | पठथ | पठामः |

—

## पाठः १६

### पुरुष प्रयोग का नियम

क. अस्मद् शब्द के साथ उत्तम पुरुष आता है
ख. युष्मद् शब्द के साथ मध्यम पुरुष आता है
ग. शेष शब्दों के साथ प्रथम पुरुष आता है।

उदाहरणार्थ —

अस्मद् शब्द

| अहम् | आवाम् | वयम् |
|---|---|---|
| पठामि | पठावः | पठामः |
| वदामि | वदावः | वदामः |

युष्मद् शब्द

| त्वम् | युवाम् | यूयम् |
|---|---|---|
| गच्छसि | गच्छथः | गच्छथ |
| धावसि | धावथः | धावथ |

शेष शब्द

| बालकः | बालकौ | बालकाः |
|---|---|---|
| सः | तौ | ते |
| कः | कौ | के |
| पश्यति | पश्यतः | पश्यन्ति |
| पिबति | पिबतः | पिबन्ति |

—

# पाठः १७

| | | | |
|---|---|---|---|
| अग्निहोत्रम् | अपावृणु | धावित्वा | अङ्गम् |
| कर्तरिकाम् | पिधेहि | भ्रमित्वा | प्रोञ्छ |
| उपवनम् | द्वारम् | गृहीत्वा | शीतलः |
| प्रवहति | व्रश्चनम् | आसीत् | उष्णः |
| आगतः | आसीत् | अस्मि | बहिः |

कोकिलस्य शब्दः मधुरः भवति ।
तस्य समीपम् गच्छ ।
सूर्यः उष्णः भवति ।
चन्द्रमाः शीतलः वर्तते ।
सः कुक्कुरम् दण्डेन ताडयति ।
वृक्षात् अधः फलम् पतति ।
गोपालः गृहात् आगच्छति ।
उद्याने शीतलः वायुः प्रवहति ।
सन्ध्याम् अग्निहोत्रम् च कुरु ।

पठित्वा क्रीडितुम् गच्छ ।
धावित्वा जलम् न पिब ।
तस्य ब्रश्चनम् मह्यम् देहि ।
सन्ध्यायाः समयः आगतः ।
मुखम् हस्तौ पादौ च प्रक्षालय ।
उपवस्त्रेण अङ्गानि प्रोञ्छ ।
त्वम् कुतः आगतः असि ?
अहम् उपवनात् भ्रमित्वा आगतः अस्मि ।
सः कुत्र गतः आसीत् ?
सः गृहम् गतः आसीत ।
मम वस्त्रम् स्वच्छम् वर्तते ।
भूमित्रः गृहात् आगतः अस्ति न वा ?
श्रीमन्, सः तु न आगतः अस्ति ।
धावित्वा कन्दुकम् आनय ।
भूमित्र, अति शीतलः वायुः प्रवहति ।
अतः अधुना द्वारम् पिधेहि ।
वातायनम् च अपावृणु ।
तूलिकाम् गृहीत्वा आगच्छ ।
कर्त्तरिकाम् अत्र आनय ।

—

## पाठः १८

| लिखितम् | महिषी | मया | पीत्वा |
| --- | --- | --- | --- |
| संजातः | संचिका | त्वया | गुरु |
| अधीतः | तूष्णीम् | इदम् | लघु |

इयम् एका महिषी वर्तते । महिषीम् पश्य ।
गावः महिषीभिः सह वनम् गच्छन्ति ।
महिष्यै जलम् रोचते । महिष्यः जले क्रीडन्ति ।
महिष्याः दुग्धम् गुरु भवति, गोः च लघु ।
त्वम् तत्र गत्वा किमर्थम् न उपविशसि ?
श्रीमन् ! नारायणः माम् पीडयति ।
इदम् पत्रम् केन लिखितम् ? मया लिखितम् ।
देवदत्त ! किम् त्वया पाठः अधीतः ?
आम्, श्रीमन् ! मया पाठः अधीतः ।
भूमित्र ! इदानीम् पठनस्य समयः संजातः ।
शीघ्रम् पुस्तकम् लेखनीम् संचिकाम् च आनय ।

—

## पाठः १६

गमिष्यामि पवनः अद्य श्वः
कर्त्तव्यम् अधीत्य सह ह्यः
गृहीतम् दृष्टः सर्पः तु

सर्पाः पवनम् पिबन्ति ।
मूर्खाः वृथा विवादम् कुर्वन्ति ।
पठनस्य समयः आगतः, अधुना पठनम् कर्त्तव्यम् ।
देवदत्तः ह्यः ग्रामम् अगच्छत् ।
यज्ञदत्तः अद्य हरिद्वारम् गच्छति ।
अहम् श्वः नगरम् गमिष्यामि ।
त्वया मम पुस्तकम् किमर्थम् गृहीतम् ?
तव मसिगर्भा तेन लेखितुम् गृहीता ।
किम् त्वया मम कम्बलः अद्य दृष्टः ?

मया तु न दृष्टः ।
किम् त्वम् मया सह क्रीडितुम् चलिष्यसि ?
आम्, अहम् पाठम् अधीत्य त्वया सह क्रीडितुम् चलिष्यामि ।
अद्य गङ्गायाः जलम् मलिनम् वर्तते ।
कूपस्य जलम् तु स्वच्छम् वर्तते ।
मूर्खेण सह विवादः न कर्त्तव्यः ।
ईश्वरस्य स्मरणम् प्रतिदिनम् कर्त्तव्यम् ।
अस्य वृक्षस्य पत्राणि अतीव सुन्दराणि सन्ति ।
अस्य कुक्कुरस्य दन्तान् पश्य ।
त्वम् मम समीपे उपविश्य पठ ।
मम लेखनीम् मह्यम् देहि, अहम् लेखितुम् गमिष्यामि ।

संख्या वाचिनः शब्दाः

| १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|
| एकः | द्वौ | त्रयः | चत्वारः | पञ्च | षट् |
| | ७ | ८ | ९ | १० | |
| | सप्त | अष्टौ | नव | दश | |

—

२० पाठः २०

| | | | |
|---|---|---|---|
| यदा | यष्टिका | आगच्छन्ति | दास्यामि |
| तदा | कर्तुम् | निवर्तन्ते | अस्माकम् |
| कदा | लब्धम् | मेघाः | युष्माकम् |

हरिणः वने वेगेन धावति ।
मया अद्य बहवः हरिणाः दृष्टाः ।
देवदत्तात् मम यष्टिकाम् आनय ।
युष्माकम् परीक्षा कदा भविष्यति ?
अस्माकम् परीक्षा तु अद्य भविष्यति ।
अहम् तस्मै शीतलम् जलम् दास्यामि ।
त्वम् पाठशालाम् किम् कर्तुम् गच्छसि ?
अहम् तत्र पठितुम् गच्छामि ।
यदा त्वम् आगमिष्यसि, तदा अहम् गमिष्यामि ।

अहं तत्र पठितुम् गच्छामि ।
कूपात जलम् पीत्वा आगच्छ ।
किम् त्वया मम मसिपात्रम् लब्धम् ?
नहि, मया तु तव मसिपात्रम् न लब्धम् ।
त्वम् भोजनम् कृत्वा शीघ्रम् आगच्छ ।
अद्य बहवः मेघाः आगताः, वर्षाः भविष्यन्ति ।
वर्षाणाम् जले स्नानेन बहवः रोगाः निवर्तन्ते ।

—

## शब्दों के तीन लिङ्ग

संस्कृत भाषा में तीन लिङ्ग होते हैं — पुंल्लिङ्ग, स्त्रीलिङ्ग, नपुंसकलिङ्ग । उदाहरणार्थ —

### पुंल्लिग

पुरुषः, अश्वः, हरिणः, सर्पः, वानरः, कुक्कुरः, वृषभः, सिंहः, विडालः, उष्ट्रः, इत्यादि । पुंलिङ्ग शब्द के अन्त में प्रायः ह्रस्व अकार आता है ।

### स्त्रीलिंग

बालिका, तूलिका, मसिगर्भा, घटिका, शाटिका, घण्टा, पिपीलिका, शाखा, लेखनी, आसन्दी, नदी इत्यादि । स्त्रीलिङ्ग शब्दों के अन्त में प्रायः दीर्घ आकार या ईकार आता है ।

### नपुंसक लिंग

पुष्पम्, फलम्, कंदुकम्, मोदकम्, वस्त्रम्, पुस्तकम्, मसीपात्रम्, पत्रम्, दुग्धम्, तक्रम्, जलम् इत्यादि । इन के अन्त में प्रायः 'अम्' आता है ।

इन्द्र सैन ३

## पाठः २१

| | | | |
|---|---|---|---|
| ग्रहीष्यामि | भुक्तवान् | यदि | कुतः |
| पास्यामि | गतवान् | तर्हि | कोष्ठः |
| दाडिमम् | अस्वस्थः | सूपम् | यतः |

सः स्वदेशम् गतवान् । असत्यम् न वक्तव्यम् ।
त्वम् विद्यालयम् कुतः न गतवान् ?
यतः अहम् अस्वस्थः अस्मि ।
देवदत्ताय कमलस्य पञ्च पुष्पाणि देहि ।
त्वम् अद्य किम् भुक्तवान् ?
रोटिकाम् सूपम् शाकम् च ।
मह्यम् जलम् देहि, अहम् पास्यामि ।
यदि त्वम् असत्यम् वदिष्यसि, तर्हि अहम् तुभ्यम् चपेटाम् दास्यामि ।
अस्मिन् कोष्ठे द्वौ विद्यार्थिनौ निवसतः ।
सः किम् भुक्तवान् ?
सः त्रीणि आम्राणि, त्रीणि दाडिमानि च भुक्तवान् ।
यः असत्यम् वदति, स पापी भवति ।

—

## पाठः २२

| | | | |
|---|---|---|---|
| अपठन् | हस्तिनाम् | भुक्त्वा | यत् |
| अकरोत् | अधिष्ठातुः | ज्येष्ठः | तत् |
| चलनीयम् | पितुः | अतः | स्म |

अधुना तव भ्राता कुत्र वर्तते ?
मम भ्राता गृहे वर्तते ।
पितुः आज्ञा सदा पालनीया ।
तव ज्येष्ठस्य भ्रातुः नाम सत्यकामः वर्तते ।
वने हस्तिनाम् चीत्कारम् शृणु ।
ह्यः सः कुत्र अगच्छत् ?
इन्द्रप्रस्थम् ।

अधिष्ठातुः वचनम् पालनीयम् ।
यत् त्वम् कथयसि, तत् सत्यम् वर्तते ।
सः तत्र किम् करोति स्म ?
सः तत्र कन्दुकम् गृहीत्वा धावति स्म ।
अहम् तु तत्र पुस्तकम् पठामि स्म ।
स यदा अधावत् तदा कोलाहलम् अकरोत् ।
तत्र कति विद्यार्थिनः अपठन् ?
तत्र अष्टादश विद्यार्थिनः अपठन् ।
अद्य अनध्यायः वर्तते, अतः क्रीडितुम् चलनीयम् ।
स्नात्वा भुक्त्वा च क्रीडितुम् चलिष्यामः ।

—

वद धातु

लृट् लकार ( भविष्यकाल )

| एक वचन | द्विवचन | बहुवचन |
| --- | --- | --- |
| वदिष्यति | वदिष्यतः | वदिष्यन्ति |
| वदिष्यसि | वदिष्यथः | वदिष्यथ |
| वदिष्यामि | वदिष्यावः | वदिष्यामः |

—

## पाठः २४

| पाययति | आचार्यपादाः | सन्ध्यावन्दनम् |
| --- | --- | --- |
| कुलपिता | अभिवादनम् | सन्ध्योपासनाम् |

इदम् गुरुकुलम् अस्माकम् कुलमाता वर्तते ।
एषा माता अस्मान् विद्याऽमृतम् पाययति ।
वयं सर्वे अस्याः कुलपुत्राः स्म ।
अतः अस्माभिः प्रेम्णा वर्तितव्यम् ।
देवेन्द्र ! इदानीम् सन्ध्यावन्दनस्य समयः जातः ।
आगच्छ स्नानम् कृत्वा सन्ध्योपासनार्थम् गच्छेम ।
जानासि, अस्य गुरुकुलस्य स्थापनाम् कः अकरोत् ?
आम् जानामि । अस्य स्थापनाम् श्री स्वामी
श्रद्धानन्दः अकरोत ।
स अस्माकम् कुलपिता वर्तते ।
कुलपितुः आज्ञा पालनीया ।
सुधीर, यथा एतत् गुरुकुलम् वर्तते तथा एकम्
कन्या गुरुकुलम् अपि वर्तते ।
तत कुत्र वर्तते ? शृणु, तत् गुरुकुलं देहरादूने वर्तते ।

—

# पाठः २३

| | | | |
|---|---|---|---|
| याः | भवान् | अस्य | भगवन् |
| ताः | पंच | महतः | निर्गच्छन्ति |
| क्व | षट् | जानामि | स्कन्धात् |

देवदत्त ! अस्य वृक्षस्य शाखाः जानासि ?
जानामि भगवन् ।
ताः कुतः निर्गच्छन्ति ?
ताः महतः वृक्षस्य स्कन्धात् निर्गच्छन्ति ।

अस्य महतः आम्रवृक्षस्य अपि याः शाखाः सन्ति,
किम् ताः जानासि ?
जानामि श्रीमन् ।
अस्तु, ताः कति ?
इदानीं मुख्याः तु पंच षड् वा सन्ति ।
भूदेव ! अस्य वृक्षस्य शाखासु किम् पश्यसि ।
श्रीमन् ! शाखासु पत्राणि फलानि च पश्यामि ।
इमानि फलानि अतिमधुराणि सन्ति ।
वर्षासु वयम् प्रतिदिनम् आम्राणि भक्षयामः ।
वृक्षस्य छाया शीतला भवति ।

—

धाव-धातु

लङ्-लकार ( भूतकाल )

| एक वचन | द्विवचन | बहुवचन |
|---|---|---|
| अधावत् | अधावताम् | अधावन् |
| अधावः | अधावतम् | अधावत |
| अधावम् | अधावाव | अधावाम् |

--

इन्द्र सैनि

## पाठः २५

भ्रमणार्थम् सत्कुर्वन्ति वृद्धः इमानि
सहाध्यायी सेत्स्यामि प्रति सत्कारः

सः त्वाम् प्रति किम् अकथयत् ?
न किमपि ।
इदानीम् शयनम् त्यक्त्वा पठनीयम् ।
देवकीर्ते ! त्वम् किमर्थम् रोदिषि ?
अध्यापकः मह्यम् एकाम् चपेटिकाम् दत्तवान् ।
कुतः ? यतः अहम् तस्य आज्ञाम् न अपालयम् ।
गुरोः आज्ञा सदा पालनीया ।
एते विद्यार्थिनः कुत्र गच्छन्ति ?
एते स्नातुम् नदीम् गच्छन्ति ।
इमानि वस्त्राणि कस्य सन्ति ?
मम तु न सन्ति ।
यदि तव न सन्ति, तर्हि कस्य सन्ति ?
अहम् न जानामि ।
विद्यारत्न ! उद्याने भ्रमणार्थम् चल ।
त्वम् तत्र गत्वा किम् करिष्यसि ?

एते वृक्षाः तु शुष्काः संजाताः, अहम् तत्र गत्वा
वृक्षान् जलेन सेक्ष्यामि ।
वृद्धानाम् सदा सत्कारः कर्तव्यः ।
सहाध्यायिभिः सह कदापि युद्धम् न कर्तव्यम् ।
अस्माकम् श्रेण्याम् दश छात्राः सन्ति ।
सर्वे अध्यापकम् सत्कुर्वन्ति ।

—

संख्यावाचिनः शब्दाः

| ११ | १२ | १३ | १४ |
|---|---|---|---|
| एकादश | द्वादश | त्रयोदश | चतुर्दश |
| १५ | १६ | १७ | १८ |
| पञ्चदश | षोडश | सप्तदश | अष्टादश |
| | १९ | २० | |
| | एकोनविंशति | विंशति | |

# पाठः २६

## पदों का अर्थबोध

| वर्तमानकाल | भविष्यकाल | भूतकाल |
|---|---|---|
| पठति | पठिष्यति | अपठत् |
| करोति | करिष्यति | अकरोत् |
| गृह्णाति | गृहीष्यति | अगृह्णात् |
| पिबति | पास्यति | अपिबत् |
| गच्छति | गमिष्यति | अगच्छत् |

१. त्वा (क्त्वा) = कर के । २. तुम् ( तुमुन् ) = के लिए । ३. तव्य ( तव्यत् ) = चाहिये ।

| | | | |
|---|---|---|---|
| गत्वा | श्रुत्वा । | पठितुम् | गन्तुम् |
| भुक्त्वा | दृष्ट्वा । | भक्षयितुम् | पातुम् |

| | | |
|---|---|---|
| गन्तव्यम् | कर्तव्यम् | पातव्यम् |
| गतवान् | भुक्तवान् | श्रुतवान् |
| पीतवान् | पठितवान् | लिखितवान् |

| | | | |
|---|---|---|---|
| अद्य | यदा । | यत्र | अतः |
| श्वः | तदा । | तत्र | यतः |
| ह्यः | कदा । | कुत्र | कुतः |

टिप्पणि : उपर्युक्त शब्दों से वाक्य बनाओ ।

इति प्रथमोऽध्यायः ।

—०—

ओ३म्

# द्वितीयोऽध्यायः

## पाठः १

### ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च ॥

अस्माकम् देहे पंच ज्ञानेन्द्रियाणि सन्ति । प्रथमम् घ्राणम्, येन वयम् सुगन्धम् गृह्णीमः । द्वितीयम् चक्षुः, येन वयम् रूपम् पश्यामः । तृतीयम् श्रोत्रम्, येन वयम् शब्दम् शृणुमः । चतुर्थी जिह्वा, यया वयम् सर्वेषाम् पदार्थानाम् रसम् जानीमः । पंचमी त्वक्, यया वयम् वस्तूनाम् स्पर्शम् जानीमः । एवं कर्मेन्द्रियाणि अपि पंच एव — पायुः, उपस्थम्, हस्तः, पादः वाक् च ।

—

## पाठः २

अश्वः

तत्र पश्य, अश्वः वर्तते । तस्य चत्वारः पादाः सन्ति । अश्वस्य पुच्छस्य रोमाणि दीर्घाणि भवन्ति । अस्य रूपम् अति सुन्दरम् वर्तते ।

अश्वः वेगेन धावति, अतः मनुष्याः एनम् आरोहन्ति । अयम् नवम् घासम् भक्षयति । परमात्मना अस्माकम् उपकाराय अश्वाः रचिताः, अतः अस्माभिः तस्मै धन्यवादः देयः ।

—

## पाठः ३

### वर्षाः

अद्य वर्षाः जाताः । अधुना तु आकाशः निर्मलः वर्तते । अधुना भ्रमणार्थम् गङ्गाम् प्रति चलामः । पश्य, अद्य गङ्गायाः जलम् अतिमलिनम् वर्तते । जलस्य प्रवाहेण सह बहूनि काष्ठानि आगच्छन्ति । त्वम् तरणम् जानासि ? आम्, जानामि । ये मनुष्याः तरणम् न जानन्ति ते तुम्बी-फलानि गृहीत्वा तरन्ति । अज्ञाते जले कदापि प्रवेशः न कर्त्तव्यः ।

| २१ | २२ | २३ |
| --- | --- | --- |
| एकविंशतिः | द्वाविंशतिः | त्रयोविंशतिः |
| २४ | २५ | २६ |
| चतुर्विंशतिः | पंचविंशतिः | षड्विंशतिः |
| २७ | २८ | २९ |
| सप्तविंशतिः | अष्टविंशतिः | एकोनत्रिंशत् |
| | ३० | |
| | त्रिंशत् | |

नामकृष्णसैन

## पाठः ४

वानरः

वानरस्य मुखम् रक्तम् भवति। तस्य पुच्छम् दीर्घम् भवति। तस्य द्वौ हस्तौ, द्वौ पादौ च भवतः। सः पादाभ्याम् चलति, हस्ताभ्याम् फलम् गृहीत्वा भक्षयति। पश्य, सः दन्तान् दर्शयति। अयम् अतिचपलः वर्तते। अत्र बहवः कपयः शाखासु कूर्दन्ते। यदि त्वम् वानराणाम् क्रीडाम् द्रष्टुम् इच्छसि, तर्हि चणकान् प्रक्षिप।

—

# पाठः ५

## बालकस्य वानरस्य च कथा

कदाचित् कश्चिद् बालकः वनम् गच्छति स्म । सः यदा किञ्चिद् दूरम् गतवान्, तदा कश्चिद् वानरः वनात् निर्गतवान् । बालकस्य हस्ते जम्बूफलानि आसन् । वानरः बालकस्य हस्तात् तानि फलानि आच्छिन्नवान् । बालकः तु रुदन् स्वगृहम् प्रति आजगाम । बालके गते सति, वानरः हर्षेण जम्बूफलानि भुक्तवान् ।

| ३१ | ३२ | ३३ |
|---|---|---|
| एकत्रिंशत् | द्वात्रिंशत् | त्रयस्त्रिंशत् |
| ३४ | ३५ | ३६ |
| चतुस्त्रिंशत् | पंचत्रिंशत् | षट्त्रिंशत् |

| ३७ | ३८ |
|---|---|
| सप्तत्रिंशत् | अष्टत्रिंशत् |
| ३९ | ४० |
| एकोनचत्वारिंशत् | चत्वारिंशत् |

—

## पाठः ६

### गौः

भूमित्र ! त्वम् अत्र गाम् पश्यसि ? पश्य, अयम् गोपालः गाम् दोग्धि । गोः चत्वारः पादाः सन्ति । अस्याः सास्ना अतिशोभना वर्तते । गौः अतिमधुरम् दुग्धम् ददाति । दुग्धाद् घृतम् जायते । तद् बहु स्वादु भवति । नवनीतम् दध्नः उत्पद्यते । गौः हरितानि शष्पाणि भक्षयति । अयम् पशुः स्नेहेन पालनीयः, कदापि च न ताडनीयः ।

—

## पाठः ७

### रात्रिः

इदानीं रात्रिः आगता। आकाशे च ताराः प्रकाशन्ते। यदा चन्द्रः उदेति, तदा आसाम् प्रकाशः मन्दः जायते। सर्वे पक्षिणः स्वानि नीडानि गतवन्तः। अधुना शृगालाः रुदन्ति। उलूकस्य भयङ्करम् शब्दम् शृणु। रात्रौ शयनात् पूर्वम् परमात्मने धन्यवादः देयः –हे परमपितः! तव कृपया अद्य मम कालः सुखेन व्यतीतः, अतः अहम् तुभ्यम् धन्यवादान् ददामि।

| ४१ | ४२ | ४३ |
|---|---|---|
| एकचत्वारिंशत् | द्वाचत्वारिंशत् | त्रयश्चत्वारिंशत् |
| ४४ | ४५ | ४६ |
| चतुश्चत्वारिंशत् | पंचचत्वारिंशत् | षट्चत्वारिंशत् |
| ४७ | ४८ | ४९ |
| सप्तचत्वारिंशत् | अष्टचत्वारिंशत् | एकोनपंचाशत् |

५०

पंचाशत्

—

## पाठः ८

### स्वदेशः

भारतवर्षम् पुण्यभूमिः कथ्यते । सा एव अस्माकम् जन्मभूमिः । अस्मिन् देशे पूर्वम् महती विद्या आसीत् । पाणिनी-कणाद-गौतमादयः मुनयः अस्मिन् एव देशे जाताः । अधुना अपि तेषाम् कीर्तिम् जनाः गायन्ति । पूर्वं अस्माकम् देशः विद्यायाम् सर्वस्य जगतः गुरुः आसीत् । इदानीं तु सर्वाः विद्या नष्टाः, प्राचीनम् वैभवम् च अपि नष्टम् । कदाचिद् अन्येभ्यः देशेभ्यः अत्र आगत्य जनाः सर्वाः विद्याः पठन्ति स्म । उक्तम् च अत्र मनुना —

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वम् स्वम् चरित्राम् शिक्षेरन् पृथिव्याम् सर्वमानवाः ॥

तथापि, ईश्वरस्य कृपया पुनः अस्माकम् देशस्य उदयः भविष्यति ।

—

# पाठः ६

प्रातःकालः

अधुना प्रातःकालः जातः । उत्थाय, नित्य-कर्माणि कृत्वा, पठितुम् विद्यालयम् प्रति गन्तव्यम् । प्रातःकाले स्नात्वा, सन्ध्या हवनम् च अवश्यम् कर्त्तव्यम् । हवनेन वायोः शुद्धिः जायते, सन्ध्यया मनः शान्तम् भवति । प्रातःकाले वायुः अति शुद्धः भवति । तस्मिन् काले उद्यानानि अति मनोहराणि दृश्यन्ते । यदा सूर्यः उदेति तदा पक्षिणः शाखासु स्थित्वा कलरवम् कुर्वन्ति । प्रातःकाले रौति कुक्कुटः ।

प्रथमः द्वितीयः तृतीयः चतुर्थः पञ्चमः
षष्ठः सप्तमः अष्टमः नवमः दशमः ।



इन्द्र सेन ३

## पाठः १०

उद्याने भ्रमणम्

उद्याने नूतनानि पुष्पाणि दृष्ट्वा हृदयम् प्रसन्नम् जायते । तेषां पुष्पाणाम् सुगन्धः अपि हृदयङ्गमः वर्तते । पाटलस्य पुष्पं अपि रमणीयं सुगन्धमयं च भवति । इदानीं दाडिमानि पक्वानि । नारङ्गस्य फलानि तु न पक्वानि । अयम् आम्रस्य वृक्षः सूर्यस्य आतपेन शुष्कताम् गतः । अहो ! पुष्पाणि पश्यत । इक्षुः अतिमधुरः भवति ।

—

# पाठः ११

## कर्त्तव्य-परायणः बालकः

कस्मिंश्चिद् विद्यालये भूमित्र-सत्यकामौ द्वौ भ्रातरौ पठतः स्म । सत्यकामः नित्यम् स्वकीयम् पाठम् स्मृत्वा श्रावयति, भूमित्रः तु न श्रावयति । एकस्मिन् दिवसे तयोः मात्रा उक्तम् 'अद्य यः पूर्वं पाठम् स्मृत्वा श्रावयिष्यति, तस्मै मोदकम् दास्यामि ।' एतत् श्रुत्वा सत्यकामः स्वकीयम् पाठम् स्मर्तुम् आरेभे । भूमित्रः तु क्रीडितुम् गतवान् । तदा मात्रा भूमित्रम् प्रति उक्तम् —

अधीष्व पुत्रकाधीष्व, मोदकानि ददामि ते ।
नोचेत् तस्मै प्रदास्यामि, कर्णमुत्पाटयामि ते ॥

सत्यकामः पाठम् श्रावितवान्, अतः एव च मातुः सकाशात् मोदकम् लब्धवान् ।

—

## पाठः १२

### प्रशंसनीयः बालकः

देवदत्त ! नरेन्द्रम् जानासि ? सर्वे जनाः तम् कुतः प्रशंसन्ति ? सः गुरोः वाक्यम् सावधानतया शृणोति । प्रतिदिनम् स्वपाठम् स्मरति । सर्वदा सत्यम् वदति । पशून् दीनान् जनान् च न दुःखयति । प्रातःकाले उत्थाय पितरौ गुरून् च अभिवदति । न कदापि कोलाहलम् करोति । फलानि च न चोरयति । प्रतिदिनम् प्रातःसायं च व्यायामम् करोति । स्वकीयानि वस्त्राणि स्वयम् प्रक्षालयति । परम् कदाचित् मलिनानि न धारयति ? कुतः न तादृशम् बालकम् जनाः प्रशंसेयुः । यदि यूयम् अपि नरेन्द्रवत् कर्माणि करिष्यथ, तर्हि प्रशंसाम् प्राप्स्यथ ।

—

# पाठः १३

## लिखन् वानरः

केनचित् पुरुषेण कश्चिद् वानरः पालितः आसीत् । सः सर्वदा लिखन्तम् स्वामिनम् पश्यति स्म । कदाचित् स्वामी कार्यवशाद् गृहाद् बहिर् गतवान् । वानरःअचिन्तयत्—अहम् अपि स्वामिवत् कुतः न लिखेयम् ? एतत् चिन्तयित्वा वानरेण स्वामिनः शाटिका धारिता, अङ्गरक्षकम् च धारितम् । ततः सः लेखितुम् उपधेः उपरि स्थितवान् । तस्मिन् एव काले तस्य स्वामी आगतवान् । वानरम् दृष्ट्वा स्वामी जहास, वानरस्य समीपम् च गत्वा उवाच — महाशय ! नमस्ते ।

—

# पाठः १४

## समय पालनम्

अयम् पठनस्य समयः वर्तते, अतः पठनीयम् । अस्मिन् समये वृथा कोलाहलः न कर्त्तव्यः । यदा खेलनस्य समयः स्यात् तदा खेलनम् कर्त्तव्यम् । उपदेशस्य समये उपदेशः श्रोतव्यः । सत्यपालः पठनस्य समये पठति स्म, क्रीडनस्य समये च क्रीडति । अतः सर्वे जनाः तम् प्रशंसन्ति । जगदीशः पठनस्य समये क्रीडति, क्रीडनस्य समये च स्वपिति । अतः सर्वे जनाः तस्य निन्दाम् कुर्वन्ति । बालाः ! गतानि वस्तूनि प्राप्यन्ते, परम् गतः समयः न प्राप्यते । मूल्येन अपि च न लभ्यते ।

—

# पाठः १५

## धीरः मनोहरः

१. 'वासुदेव ! आगच्छ आवाम् चित्रम् कुर्वः' इति उक्त्वा मनोहरः स्वकीयम् आसनम् प्रसार्य उपविष्टवान् । वासुदेवः अपि स्वकीयम् आसनम् गृहीत्वा तस्य पार्श्वे उपाविशत् । तयोः मनोहरः धीरतरः आसीत् । वासुदेवः तु चपलः आसीत् ।

२. मनोहरः कमलस्य चित्रम् चकार । वासुदेवेन तस्य उपरि मसी पातिता । चित्रम् विरूपम् अभवत् । ततः मनोहरः अपरम् चित्रम् कृतवान् । वासुदेवेन तस्य उपरि धूलिः पातिता । मनोहरः तदा शान्तया वाचा उवाच — भ्रातः ! किम् एतत् करोषि ?

३. यदा तत्र तयोः पिता आजगाम । स उवाच — मनोहर ! चित्रम् दर्शय । मनोहरः दर्शितवान् । तद् दृष्ट्वा स पृष्ठवान् — धूलिः केन पातिता ? मनोहरेण उक्तम्—वासुदेवेन पातिता ।

वासुदेवः अपि याथार्थ्येन सर्वम् उक्तवान् तदा तयोः पिता उवाच — वत्स ! पुनः एवम् कदापि न कर्त्तव्यम् । यतः त्वया सत्यम् उक्तम्, अतः त्वाम् न दण्डयामि । तयोः पिता मनोहराय पारितोषक-रूपेण एकाम् लेखनीम् ददौ ।

—

## सुभाषितानि

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥
परोपकारः पुण्याय, पापाय परपीडनम् ॥
श्वः कार्यम् अद्य कुर्वीत ॥
सत्यं ब्रूयात्, प्रियं ब्रूयात् ॥
नास्ति सत्यात् परो धर्मः ॥
सत्यमेव जयति नानृतम् ॥
विद्वान् सर्वत्र पूज्यते ॥

—

# पाठः १६

## ग्रीष्मकालः

अधुना ग्रीष्मकालः वर्तते । शरीरे बहुः प्रस्वेदः जायते । वायुः अपि उष्णः वर्तते । शीतलम् जलम् पातुम् इच्छा जायते । नगरवासिनः तु जले हिमम् प्रक्षिप्य पिबन्ति । परन्तु हिममिश्रितेन जलेन पिपासा न निवर्तते, प्रत्युत अधिका जायते । अतः तत् जलम् न पातव्यम् । अस्मिन् समये गङ्गायाः जलम् शीतलम् भवति । सायंकाले गङ्गायाः जलेन स्नानम् कृत्वा शैत्यम् जायते । मध्याह्ने कोऽपि बहिः निर्गन्तुम् न शक्नोति । अन्ये मनुष्याः छत्रम् धारयित्वा बहिः गच्छन्ति, परन्तु ब्रह्मचारिभिः कदापि छत्रम् न धारणीयम् । पादुके धारयित्वा वहिः गन्तव्यम्, अन्यथा आतपेन पादौ ज्वलिष्यतः ।

—

## पाठः १७

### उत्तमः विचारः

१. एकस्मिन् दिने विश्वेश्वरः उद्याने खेलति स्म । तत्र तेन एकम् फलम् पतितम् दृष्टम् । तत फलम् विश्वेश्वरः आनीय अध्यापकाय दत्तवान् ।

२. अध्यापकः सन्तुष्य तत् फलम् विश्वेश्वराय एव दत्तवान् । विश्वेश्वरः तु न भुक्तवान्, उक्तवान् च अध्यापकाय 'श्रीमन्, अहम् एकाकी कथम् भक्षयेयम्, अपरेभ्यः अपि विद्यार्थिभ्यः दीयताम् ।

३. एतत् श्रुत्वा तेषाम् अध्यापकः तस्य फलस्य बहूनि खण्डानि कृत्वा सर्वेभ्यः ददौ । सर्वे विद्यार्थिनः हर्षम् आपुः, विश्वेश्वरस्य च प्रशंसाम् कृतवन्तः ।

--

# पाठः १८

परस्परम् प्रीतिः

परस्परम् कदापि युद्धम् न कर्त्तव्यम् । क्रोधेन शरीरम् दुर्बलम् भवति । यः विद्यार्थी अन्यैः सह युद्धम् करोति, तम् प्रति कोऽपि न वदति । सर्वे तस्माद् घृणाम् कुर्वन्ति ।

द्रुमेषु शान्त्या निवसन्ति पक्षिणः,
शरीरहानिश्च भवत्यशान्तितः ।
ततः कुतः छात्रजनैः परस्परम्,
कदापि कार्य्यः कलहो निजे कुले ॥१॥[1]

सहाध्यायिभिः सह सर्वदा प्रीत्या वर्तनीयम् । ऐक्ये बहवः गुणाः निवसन्ति ।

---

१ सन्धिच्छेदं कृत्वा श्लोकस्य अर्थः कार्यः ।

—

# पाठः १६

## ईश्वरः

ईश्वरः अस्माकम् सर्वेषाम् पिताः वर्तते । तेन इदम् सर्वम् जगद् रचितम् । माम् अपि सः एव रचितवान् । सः मह्यम् शीतलम् वायुम् ददाति । पानाय निर्मलम् जलम् अपि तेन एव दत्तम् । यथा अहम् तस्य पुत्रः अस्मि, तथा एव अन्ये अपि तस्य पुत्राः सन्ति । अतः कोऽपि न पीडनीयः । यदा अहम् शयनम् करोमि तदा अपि सः एव माम् रक्षति । सः सर्वत्र व्यापकः वर्तते । सः सर्वदा माम् पश्यति । अतः अहम् कदापि पापम् न करिष्यामि ।

सूर्यश्चन्द्रस्तारका भूमिरेषा,
शीतो वायु र्निर्मलम् वारि नद्या ।
एतत् सर्वम् येन मह्यम् प्रदत्तम्,
प्रातःसायम् तम् महेशम् स्मरेम ॥२॥

इति द्वितीयोऽध्यायः, इति संस्कृत-प्रवेशिका समाप्ता ॥

—o—

# सुभाषितानि

विद्वत्वं च नृपत्वं च, नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ १॥

विदेशेषु धनं विद्या, व्यसनेषु धनं मतिः।
परलोके धनं धर्मः, शीलं सर्वत्र वै धनम् ॥ २॥

कोऽतिभारः समर्थानां, किं दूरं व्यवसायिनाम्।
को विदेशः समर्थानां, कः परः प्रियवादिनाम् ॥ ३ ॥

न कश्चिदपि जानाति, किं कस्य श्वो भविष्यति।
अतः श्वः करणीयानि, कुर्यादद्यैव बुद्धिमान् ॥ ४ ॥

अविचार्य न वक्तव्यं, वक्तव्यं सुविचारितम्।
किं च तत्रैव वक्तव्यं, यत्रोक्तं सफलं भवेत् ॥ ५ ॥

क्षमा शस्त्रं करे यस्य, दुर्जनः किं करिष्यति।
अतृणे पतितो वह्निः, स्वयमेव प्रशाम्यति ॥ ६ ॥

क्षणशः कणशश्चैव, विद्यां अर्थं च साधयेत्।
क्षणत्यागे कुतो विद्या, कणत्यागे कुतो धनम् ॥ ७ ॥

जनिता चोपनेता च, यश्च विद्यां प्रयच्छति।
अन्नदाता भयत्राता, पञ्चैते पितरः स्मृताः ॥ ८ ॥

उद्यमः साहसं धैर्यं, बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते, तत्र दैवं प्रसीदति ॥ ९ ॥

धर्मो जयति नाधर्मः, सत्यं जयति नानृतम्।
क्षमा जयति न क्रोधो, देवो जयति नासुरः ॥ १० ॥

काकः कृष्णः पिकः कृष्णः, को भेदः पिक काकयोः।
वसन्तसमये प्राप्ते, काकः काकः पिकः पिकः ॥ ११ ॥

हंसः श्वेतः बकः श्वेतः, को भेदः बकहंसयोः ।
नीर - क्षीर - विवेके तु, हंसो हंसो बको बकः ॥ १२ ॥

सुलभाः पुरुषाः राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १३ ॥

वृथा वृष्टिः समुद्रेषु, वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थस्य, वृथा दीपो दिवाऽपि च ॥ १४ ॥

धर्मार्थकाम मोक्षाणां, यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्यैव तस्य जन्म निरर्थकम् ॥ १५ ॥

श्रूयतां धर्मसर्वस्वं, श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १६ ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भि रुच्यते ॥ १७ ॥

गुणेषु क्रियतां यत्नः, किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिः, गावः क्षीर-विवर्जिता ॥ १८ ॥

परोपकाराय फलन्ति वृक्षाः,
परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः,
परोपकाराय सतां विभूतयः ॥ १९ ॥

आदौ रामतपोवनादिगमनं, हत्वा मृगं काञ्चनम्,
वैदेही - हरणं जटायु - मरणं, सुग्रीव- संभाषणम् ।
बालि - निग्रहणं समुद्रतरणं, लङ्कापुरी-दाहनम्,
पश्चाद्द रावण-कुम्भकर्ण-हननं, एतद्धि रामायणम् ॥ २० ॥

# स्वाध्याय के लिए चुनी हुई पुस्तकें

## वैदिक-साहित्य

| | | |
|---|---|---|
| अध्यात्म रोगों की चिकित्सा | श्री इन्द्र विद्यावाचस्पति | २.५० |
| ईशोपनिषद्भाष्य | श्री इन्द्र विद्यावाचस्पति | २.०० |
| मेरे पिता | श्री इन्द्र विद्यावाचस्पति | ४.०० |
| वेद का राष्ट्रीय गीत | श्री प्रियव्रत वेदवाचस्पति | ५.०० |
| मेरा धर्म | श्री प्रियव्रत वेदवाचस्पति | ७.०० |
| वेदोद्यान के चुने हुए फूल | श्री प्रियव्रत वेदवाचस्पति | ५.०० |
| वरुण की नौका, दो भाग | श्री प्रियव्रत वेदवाचस्पति | ६.०० |
| वैदिक विनय, प्रथम भाग | श्री अभय विद्यालंकार | २.०० |
| वैदिक विनय, द्वितीय भाग | श्री अभय विद्यालंकार | २.०० |
| वैदिक विनय, तृतीय भाग | श्री अभय विद्यालंकार | २.०० |
| वैदिक ब्रह्मचर्य गीत | श्री अभय विद्यालंकार | २.०० |
| ब्राह्मण की गौ | श्री अभय विद्यालंकार | .७५ |
| आत्म-समर्पण | श्री भगवद्दत्त वेदालंकार | १.५० |
| वेदगीताञ्जलि (वैदिक गीतियां) | श्री वेदव्रत वेदालंकार | २.०० |
| वैदिक वीर गर्जना | श्री रामनाथ वेदालंकार | .८८ |
| वैदिक सूक्तियां | श्री रामनाथ वेदालंकार | १.७५ |
| सोम-सरोवर, सजिल्द | श्री चमूपति एम. ए. | २.०० |
| वैदिक-कर्तव्य-शास्त्र | श्री धर्मदेव विद्यावाचस्पति | १.५० |
| अग्निहोत्र | श्री देवराज विद्यावाचस्पति | २.२५ |

## संस्कृत ग्रन्थ

| | |
|---|---|
| संस्कृत-प्रवेशिका, प्रथम भाग (सोलहवां संस्करण) सचित्र | .८७ |
| संस्कृत-प्रवेशिका, द्वितीय भाग (छटा संस्करण) सचित्र | .८७ |
| साहित्य-सुधा-संग्रह (तीन भाग) | १.२५, १.२५, १.२५ |
| पाणिनीयाष्टकम् पूर्वार्ध, उत्तरार्ध | ७.००, ७.०० |
| सरल शब्दरूपावली | १.२५ |
| संस्कृत ट्रान्सलेशन एण्ड कम्पोज़िशन | १.२५ |
| संस्कृत साहित्य पाठावली | .१६ |
| संक्षिप्त मनुस्मृति | .५० |

रघुवंश, संशोधित (तीन सर्ग) .२५ नीतिशतक, संशोधित .१६
बालनीति कथामाला ( नवीन संस्करण ) १.५०

## ऐतिहासिक तथा जीवनी

भारतवर्ष का इतिहास, ३ भाग, श्री रामदेव २.००, २.५०, ४.५०
बृहत्तर भारत, सजिल्द, अजिल्द श्री चन्द्रगुप्त ६.००, ७.००
ऋषि दयानन्द का पत्र-व्यवहार, दो भाग स्वामी श्रद्धानन्द .७५
अपने देश की कथा (छटा संस्करण) श्री सत्यकेतु १.३७
हैदराबाद आर्य सत्याग्रह के अनुभव श्री क्षितीश .५०
योगेश्वर कृष्ण (दूसरा संस्करण) श्री चमूपति ४.००
सम्राट् रघु श्री इन्द्र विद्यावाचस्पति १.२५
जीवन की झांकियां (तीन भाग) " ५०, ५०, १.००
जवाहरलाल नेहरू " १.२५
महर्षि दयानन्द का जीवन-चरित्र " २.००
दिल्ली के वे स्मरणीय २० दिन " .५०

## स्वास्थ्य सम्बन्धी पुस्तकें

आहार (भोजन की पूर्ण जानकारी हेतु) श्री रामरक्ष ५.००
आसव-अरिष्ट श्री सत्यदेव २.५०
लहसुन : प्याज़ (३रा परिवर्द्धित संस्करण) श्री रामेश बदी २.५०
शहद (शहद के बारे में पूरी जानकारी) " ३.००
तुलसी (दूसरा परिवर्द्धित संस्करण) " २.००
सोंठ (तीसरा परिवर्द्धित संस्करण) " १.५०
देहाती इलाज (तीसरा परिवर्द्धित संस्करण) " १.००
मिर्च (काली, सफेद, लाल) दूसरा संस्करण " १.००
सांपों की दुनिया, सचित्र, सजिल्द " ५.००
त्रिफला (तीसरा संवर्द्धित संस्करण) " ३.२५
नीम : बकायन (अनेक रोगों में उपयोग) " १.७५
पेठा : कद्दू (गुण तथा विस्तृत उपयोग) " .५०
अशोक (अशोक वृक्ष के चिकित्सा में विस्तृत उपयोग)" १.००
बरगद (नया परिवर्द्धित संस्करण) " १.००
देहात की दवाएं (सरकार द्वारा पुरस्कृत) सचित्र " .७५

| | | |
|---|---|---|
| जल-चिकित्सा | श्री देवराज | १.७५ |
| स्तूप निर्माण कला, सचित्र, सजिल्द | श्री नारायणराव | ३.०० |
| प्रमेह, श्वास, अर्शरोग | " | १.२५ |
| सन्ध्या-सुमन | श्री नित्यानन्द | १.५० |
| स्वामी श्रद्धानन्द जी के उपदेश, तीन भाग | श्री लक्ष्मूराम जी | ३.७५ |
| आत्म-मीमांसा | श्री नन्दलाल | २.०० |
| वैदिक पशुयज्ञ-मीमांसा | श्री विश्वनाथ | १.०० |
| सन्ध्या रहस्य | " | २.०० |
| अथर्ववेदीय मन्त्र-विद्या | श्री प्रियरत्न | १.५० |
| जीवन संग्राम | श्री इन्द्र विद्यावाचस्पति | १.०० |

## विविध पुस्तकें

| | | |
|---|---|---|
| विज्ञान प्रवेशिका (बालकों के लिए) | श्री यज्ञदत्त | १.०० |
| भाषा-प्रवेशिका (वर्धायोजनानुसार) | श्री ओम्प्रकाश | .७५ |
| आर्य भाषा पाठावली (८वां संस्करण) | श्री भवानी प्रसाद | १.५० |
| स्वतन्त्र भारत की रूप रेखा | श्री इन्द्र विद्यावाचस्पति | १.५० |
| सरला की भाभी, पहला भाग | " | २.०० |
| सरला की भाभी, दूसरा भाग | " | ३.५० |
| आत्म बलिदान | " | ३.०० |
| जमींदार | " | २.०० |

## गुरुकुल सम्बन्धी पुस्तकें

| | |
|---|---|
| गुरुकुल कांगड़ी का पचास वर्ष का इतिहास | .७५ |
| पाठविधि—गुरुकुल के वेद तथा साधारण महाविद्यालय की | .६२ |
| पाठविधि—गुरुकुल की नवम तथा दशम श्रेणी की | .५० |
| पाठविधि प्रथम से अष्टम श्रेणी तक | .२५ |
| गुरुकुल पत्रिका (मासिक) वार्षिक मूल्य देश में | ४.०० |
| विदेश में | ६.०० |
| गुरुकुल पत्रिका की प्रत्येक वर्ष की फाइल, सजिल्द | ५.०० |

प्राप्तिस्थान

पुस्तक भण्डार, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।

## बालनीतिकथामाला

( नवीन संस्करण )

यह पुस्तक गुरुकुल संस्कृत ग्रन्थावली का तृतीय पुष्प है। इ
में पञ्चतन्त्र तथा हितोपदेश की बालोपयोगी कथाओं का उचि
समावेश किया गया है। पाठों में सन्धियों का प्रयोग भी शनैः-श
बढ़ाया गया है, जिस से छात्रों को कठिनाई अनुभव न हो। प्रत्ये
पाठ के नीचे नवीन सन्धि के नियम, पाठ सम्बन्धी प्रश्न त
कारक आदि विषयक अभ्यासार्थ प्रश्न भी दिये गए हैं। पञ्चतन्
की कथाओं के साथ-साथ मनुस्मृति तथा महाभारत के बाल
पयोगी श्लोकों का सुन्दर संग्रह किया गया है। संवाद तथा सु
षित के अतिरिक्त ग्रन्थ की समाप्ति पर कठिन शब्दों का अ
भी दे दिया गया है। मूल्य १.७५ नये पैसे

## सरल शब्दरूपावली

(द्वितीय संस्करण)

यह पुस्तक नवीन पद्धति के अनुसार गुरुकुल की प्रारम्भि
कक्षाओं, संस्कृत की प्राज्ञ प्रथमा आदि प्रारम्भिक परीक्षा के विद्य
र्थियों तथा राजकीय स्कूलों में मैट्रिक के छात्रों के पाठ्यक्रम क
दृष्टि से लिखी गई है। इस में संज्ञावाची शब्दों के अजन्त
हलन्त के क्रम के अतिरिक्त सर्वनाम, विशेषणवाची शब्दों के
क्रमशः रूप तथा संक्षिप्त नियम दे दिये गए हैं। प्रत्येक शब्द
नीचे तत्समान रूप वाले शब्दों का भी हिन्दी में उल्लेख कर दिय
गया है। शब्दों को व्यवहार में प्रयोग करने की योग्यता उत्प
करने के लिए ग्रन्थ के प्रारम्भ में कारक तथा विभक्तियों क
उपयोगी परिचय भी दे दिया गया है। ग्रन्थ की समाप्ति प
अभ्यासार्थ प्रश्नमाला देने के कारण विद्यार्थियों के लिये उपयोगी
सिद्ध हुई है। इसी से उत्साहित हो कर यह नवीन संस्करण प्रकाशि
किया जा रहा है। इस में सर्वनाम तथा विशेषणों के विषय को कु
बढ़ा भी दिया है। मूल्य १.२५ नये पैसे

पुस्तक भंडार गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।